॥ षट्त्रिंशत्तत्त्व सन्दोहः ॥

यदयमनुत्तरमूर्तिर्निजेच्छयाखिलमिदं जगत्स्रष्टुं ।
पस्पन्दे स स्पन्दः प्रथमश्शिवतत्त्वमुच्यते तज्ज्ञैः ॥ १॥

इह हि स्वतंत्रशिवाद्वयदर्शने
परमेश्वरस्स्वतंत्रश्चिद्घनसंवित्स्वभावस्स्वया
स्वातंत्र्याख्यया
शक्त्या सततं शिवादिधरण्यन्ततत्तद्भुवनभूततत्त्वात्मना
क्रीडनादिशीलत्वात् कृत्यपञ्चकविधायी वस्तुतः
क्रमराहित्येऽपि
विश्वसृष्टौ आभासनमात्रसारेण
पारमार्थिककार्यकारणभावेन
क्रममपि उद्भावयन् अनाख्यत्वेऽपि स्वेच्छयैव स्वात्मभित्तौ
तत्तच्छिवादि
तत्त्वाभिख्यामवभासयति । तथात्वेऽपि
षट्त्रिंशत्तत्त्वमयकुलस्वरूपपरामर्शनाताखण्ड्येन
स्वचमत्कारविमर्शसारामनुत्तर आनंदधनावस्थान्नोज्झतीति
वास्तवाशयावबोधनाय कश्चिंमहामाहेश्वरः
परमेशशक्तिपातानुगृहीतः
तत्त्वक्रमप्रक्रियामार्याभिरेकविंशत्या
समुपनिबबन्ध यदयमित्यादिना । अनुत्तरमूर्तेभगवतः
परमेश्वरस्य
प्रकाशघनस्वात्मैकात्म्येनावस्थितं विश्वं सिसृक्षोः
दर्पणनगरवत स्वेच्छयैव स्वात्मन्याद्या
प्रोंमिमीलयिषावस्था
शिवतत्त्वव्यपदेश्या पञ्चशक्तिनिर्भरत्वात्स्वातंत्रियात्
चिदादिप्राधान्येन क्रमशः शुद्धाध्वनि
तत्त्वसृष्ट्यवभासनं
मायाविद्यादेस् संवित्प्रकाशघनपरमशिवात्
व्यतिरेकानतिरेकविकल्पैरुपहतत्वात्
स्वतंत्रियमेव केवलं विश्वोत्पत्तिसंहरणादौ
मूर्धाभिषिक्तं
तत्तदनन्तशक्तिनियमानां क्रोडीकारित्वात् वक्ष्यमाणेऽपि
तत्तद्रूपोपग्रहणे स्वतंत्र्यामुक्तत्वान्न
प्राच्यस्वभावापायः ॥ १॥

इच्छा सैवस्वच्छा संततसमवायिनी सती शक्तिः ।

सचराचरस्य जगतो बीजं निखिलस्य निजनिलीनस्य ॥ २॥

तस्य स्वाभिन्ना स्वतंत्रेच्छाशक्तिरेवोद्भविष्यतो विश्वस्य
स्वांतर्निलीनत्वात्बीजभूता शक्तितत्त्वतां
याति शक्तेश्शक्तिमद्धर्मत्वेऽपि
नांयदर्शनाभिमतवत्तस्मात्व्यतिरेकः
नैष्कर्म्येणात्रेच्छायास्स्वच्छत्वात्
हृदयसारोर्मिप्रभृतिभिः संज्ञाभि तत्तद्दर्शनेषु अभिधानं ।
परमेश्वर एव हि स्वैश्वर्योच्छलत्तया
पूर्णाहन्ताचमत्कारतारतम्येन
शक्तिदर्शामधिशेते इत्यत्रानन्दशक्तिप्राधान्यं ॥ २॥

स्वेच्छाशक्त्युद्गीर्णं जगदात्मतया समाच्छाद्य ।
निवसन्स एव निखिलानुग्रहनिरतस्सदाशिवोऽमिहितः ॥ ३॥

तस्यैव परमेश्वरस्य स्वस्वातन्त्र्योद्भासितस्य विश्वस्य
विशुद्धसंविन्मात्राधिकरण्येन स्वात्मन्येव
समुल्लासनात्सदित्याख्यानात्सदाशिवतत्त्वावस्थातस्स
भाविनस्समस्तभावराशेस्सम्यक्
बहिरवबिभासयिषालक्षणक्रीडारसिकत्वातनुग्रहनिरततद्भूमिकां
गृह्णातीत्यतो निवसन्नित्युक्तं ॥ ३॥

विश्वं पश्चात्पश्यन् इदन्तया निखिलमीश्वरो जातः ।
सा भवति शुद्धविद्या येदन्ताहन्तयोरभेदमतिः ॥ ४॥

एवं क्रमावभासनात्विश्वस्य शुद्धसंविन्मात्राधिकरण
एव स्फुटतया परामृश्यमानस्याहमंशे
अभिषेचनात्स एव परमेश्वर ईश्वरतत्त्वदशामधिश्रयत्यत्र
वेद्यजातस्य स्फुटावभासनाज्ज्ञानशक्त्युद्रेकः ।
आन्तरदशाय उद्रिक्तत्वात्सदाशिवावस्था
बर्हिभावपरतोद्रेकात् तु ईश्वरावस्था इत्यनयोर्विशेषः ।
प्ररूढभेदस्य इदन्तांशस्य
समधृततुलापुटन्यायेनाहमंशस्फुरणायां
शुद्धविद्यातत्त्वं ।
अत्र विश्वस्य स्फुटतरं परामर्शनात्क्रियाशक्तिः प्रधाना ।
इयति च शुद्धस्वातंत्र्यमेव तत्तद्वैचित्र्येण प्रस्फुरतीति
शुद्धोध्वा ॥ ४॥

माया विभेद बुद्धिर्निजांशजातेषु निखिलजीवेषु ।
नित्यं तस्य निरङ्कुशविभवं वेलेव वारिधे रुन्धे ॥ ५॥

अशुद्धे पुनरध्वनि परमेश्वरैव
स्वात्मप्रच्छादनसामक्रीषयाधोरभट्टारकभूमिं
मन्त्रमहेश्वररूपां गृहीत्वा दुर्घटसम्पादनसामर्थ्येन
मायाशक्त्या स्वतोऽन्योन्यतश्च भिन्नमणुनां भोगसिद्धये
कलादिक्षित्यन्तं जडाजडवर्गं क्रमतोऽक्रमतोऽप्यवभासयति
तत्र भिन्नभिन्नप्रथात्मकमयीयमलेन स्वाङ्गकल्पेष्वपि
जडवेद्यवर्गेषु विभिन्नतया बुद्धिरेव मायाख्यं तत्त्वं येन
तस्य
निरर्गलं स्वातंत्र्यं प्रतिहंयते वेलयेवाब्धितरङ्गाणां
वैभवं ॥ ५॥

स तया परिमितमूर्तिस्सङ्कुचितसमस्तशक्तिरेष पुमान् ।
रविरिव संध्यारक्तस्संहृतशक्तिस्स्वभासनेऽप्यपटुः ॥ ६॥

अविकार्यस्यापि तस्य चिदात्मनः स्वशक्तीनां
सङ्कोचनपुरः सरं शक्तिदारिद्र्यमापन्नस्याण्वपर
पर्याया पुरुषसंज्ञा संहृतशक्तित्वेन परिमितात्मा
स स्वात्मैश्वर्यामपि प्रत्यभिज्ञातुमपटुः सञ्चरति
विभिन्नयोनिषु ।
यदा
पुनश्शक्तिपाततारतंयात्विज्ञापितैश्वर्यस्स्वाङ्गकल्पमेव
विश्वं प्रत्यभिजानीयात् तदा जीवत् शिवभावं प्रत्यापद्यते ॥ ६॥

सम्पूर्णकर्तृताद्या बह्व्यस्सन्त्यस्य शक्तयस्तस्य ।
सङ्कोचात्सङ्कुचिताः कलादिरूपेण रूढयन्त्येवं ॥ ७॥

शत्तयन्तरक्रोडीकारिण्या स्वातन्त्रशक्त्यावियुक्तत्वादेव
परमेश्वरस्य बहुशक्तित्वं सङ्कोचग्रहणादेव
सर्वास्तच्छक्तयस्सङ्कुचितीभूय कलादितत्त्वपञ्चकेन
प्ररोहमुपगच्छन्ती । ता यथा
सर्ता सर्वज्ञता तृप्तिः नित्यता स्वातन्त्र्यमित्येतत्पञ्चकं
शुद्धाशुद्धभेदेन द्विधा परमेशविषयतया शुद्धं
संसारविषयतया तु अशुद्धं ॥ ७॥

तत्सर्वकर्तृता सा सङ्कुचिता कतिपयार्थमात्रपरा ।

किञ्चित्कर्तारममुं कलयन्ति कीर्त्यते कला नाम ॥ ८॥

गोपितस्वरूपत्वान्निरुद्धशक्तेः परमेश्वरस्य
सर्वकर्तृताशक्तिः प्राणादिपरिमितप्रमातृभावे किञ्चित्
कर्तृतोद्वलनात्मना कलनेन कलातत्त्वात्मतां याति
यद्वशात्किञ्चिदेव कर्तुमुत्सहते अणुः न सर्वत्र कर्तृत्वमिति ॥ ८॥

सर्वज्ञतास्य शक्तिः परिमिततनुरल्पवेद्यमात्रपरा ।
ज्ञानमुत्पादयन्ती विद्येति निगद्यते बुधैराद्यैः ॥ ९॥

एवं तस्यैव सर्वज्ञताशक्तिस्सङ्कोचं गृहीतवती
किञ्चिज्ज्ञेयमात्रपरत्वेन ज्ञानोत्पादनात्विद्यातत्त्वं
विद्ययैव बुद्धिदर्पणे प्रतिफलिता भावा विविच्यंते
गुणसङ्कीर्णनतया तस्य विवेक्तुमक्षमत्वात्तस्मात्
विद्ययैवार्थविवेकः ॥ ९॥

नित्यपरिपूर्णतृप्तिः शक्तिस्तस्यैव परमिता तु सती ।
भोगेषु रज्जयन्ती सततममुं रागतत्त्वतां याता ॥ १०॥

परमेश्वरस्य नित्यपरिपूर्णतृप्तिर्नाम शक्तिः पारमित्य
याता यत्र क्वचन उपादेयाद्यभिमते
किञ्चन्मे भूयात् इति सामान्येन अभिष्वङ्गमात्रादापद्यते
रागतत्त्वं ।
विशेषाभिष्वङ्गस्तु अस्यैव पल्लवितप्रायेत्येतदेव कलाविद्ययोः
प्रागुक्तयोः किञ्चिद्धागे निमित्तं ॥ १०॥

सा नित्यतास्य शक्तिर्निकृष्य निधनोदयप्रदानेन ।
नियतपरिच्छेदकरी क्लृप्ता स्यात्कालतत्त्वरूपेण ॥ ११॥

अकालकलितस्य चिदात्मनो नित्यत्वाख्या
शक्तिन्यग्भावमाश्रित्य कार्यारूषितकर्तृत्वकलनय
आणुं तुट्यादिक्रमाभासनात्मना कालेन संयोज्य
कालतत्त्वव्यपदेश्या कल्प्यते येनायमणुः
भूतादिक्रियाक्रमकलितः
कालवशतामपद्यते ॥ ११॥

यास्य स्वतन्त्रताख्या शक्तिस्सङ्कोचशालिनी सैव ।
कृत्याकृत्येष्ववशं नियतममुं नियमन्त्यभून्नियतिः ॥ १२॥

स्वतंत्र्यमेवास्य परप्रमातुस्सङ्कुचन्नियतितत्त्व तामाभासयति
यतः कार्याकार्येषु नियमाधानात्
विशिष्टे कार्ये विशिष्तं कारणं एवादध्यान् नानियतं इति ।
एतेन कलादिना कञ्चुकेना वृतोऽयं शक्तिदारिद्र्यमनुभूय
कलादि
मुखेनैव स्ववैभवात् प्रतिवितीर्णकिञ्चिदंशः पशुरित्युच्यते ॥ १२॥

इच्छादित्रिसमष्टिश्शक्तिश्शान्तास्य सङ्कुचद्रूपा ।
सङ्कलितेच्छाद्यात्यकसत्त्वादिक साम्यरूपिणी तु सती ॥ १३॥

बुद्ध्यादिसामरस्यस्वरूपचित्तात्मिका गता प्रकृतिः ।
इच्छास्य रजोरूपाहङ्कृतिरासीदहं प्रतीतिकरी ॥ १४॥

अस्य शान्ताख्याशक्तिरक्षुब्धत्वातिच्छादीनां
शक्तीनां गर्भीकरणात्समष्टिरूपा पारमित्यग्रहणाच्च
गुणानामविभागावस्था प्रकृतितत्त्वं ।
गुणानामिच्छादिशक्तित्रिकेनान्वारब्धत्वात्त्रित्वं यत्प्रक्षोभात्
प्रकृतिकसर्गस्य प्रसरः । तत्र चित्तात्मके बुद्धयकृन्मनांसि
सम्यावस्थामधिश्रियन्ति । अत्र तत्त्वक्रमप्रसरे
शिवादिसकलान्तेषु
प्रभातृवर्गेषु ज्ञानक्रियाशक्ती एव मुख्यमुपकरणं ते एव
सङ्कुचिद्रूपे ईश्वरशुद्धविद्ये सङ्कुचिते विद्याकले
अत्यन्तसङ्कुचिते
बुद्धिकर्मेन्द्रियाणि क्रियायाः सङ्कोचसीम्नि भूतसूक्ष्मादि इति
विज्ञेयं । अणोः रजः परिणामिनी इच्छशक्ति
अहमित्याभिमानलक्षणा अहङ्कृतिः ॥ १३-१४॥

ज्ञानापि सत्त्वरूपा निर्णयबोधस्य कारणं बुद्धिः ।
तस्य क्रिया तमोमयमूर्तिर्मनोच्यते विकल्पकरी ॥ १५॥

सत्त्वपरिणामिनी ज्ञानशक्तिरेवार्थाध्यवसायलक्षणा
बुद्धिः । तमः परिणामिनी क्रियाशक्तिः ।
विकल्पकरणलक्षणं
मनस्तत्त्वमुच्यते ॥ १५॥

वामादिपञ्चभेदस्सैव सङ्कुचितविग्रहो देवः ।
ज्ञानक्रियोपरागप्राधान्याद्विविधविषरूपोऽभूत् ॥ १६॥

सैव क्रीडासतत्त्वो वामोदेवादिपञ्चमूर्तितत्त्वात् सङ्कुचितो भूत्वा ज्ञानशक्त्युपरञ्जनप्रधानतया ज्ञानेन्द्रियतद्विषयशरीरतां क्रियाशक्त्युपाधिप्राधान्यात् कर्मेन्द्रियव्यापारवत्त्वं च उपादत्ते । शक्तिपञ्चकोपादानात् करणानां पञ्चधात्वं बोध्यं ॥ १६॥

श्रोत्रं चक्षुस्स्पर्शनजिह्वाघ्राणानि बोधकरणानि ।
शद्वस्पर्शरूपरसगन्धौ चेति भूतसुक्ष्माणि ॥ १७॥

श्रोत्रादीनि ज्ञानेन्द्रियाणि शब्दादीनि तन्मात्राणि ॥ १७॥

अयमेवातिनिकृष्टो जातो भूतात्मनापि भूतेशः ।
गगनमनिलश्च तेजस्सलिलं भूमिश्च पञ्चभूतानि ॥ १८॥

अत्यन्तसङ्कोचग्रहणातचिद्रूपतामवभास्याकाशदीनि पञ्चभूतानि ॥ १८॥

श्रोत्रादिकरणवेद्याश्शब्दाद्यास्तानि वेदकान्येषां ।
वचनकरी वागासीत् पाणिस्स्यात्करणभूतादाने ॥ १९॥

शब्दादिज्ञानसाधनानि श्रोत्रादिकरणानि
वचनादिक्रियासाधनानि
वागादीनि कर्मेंद्रियाणि ॥ १९॥

गमनविसर्गानन्दत्रितये पादादिकं करणं ।
गन्धवती भूमिस्स्यादापस्सांसिद्धिकद्रवास्तेजः ॥ २०॥

उष्णस्पर्शमरूपस्पर्शो वायुरम्बरं सशब्दं ।
षट्त्रिंशत्तत्त्वमयं वन्दे कुलातिगं शंभुं ॥ २१॥

आदिना पायूपस्थौ गृह्येते । गंधवत्त्वं भूमेर्लक्षणं सांसिद्धिकद्रवत्वमब्लक्षणमुष्ण स्पर्शेन तेजो लक्ष्यते अरूपस्पर्शो वायुलक्षणं शब्दाकशस्येति प्रत्येकं मुख्यगुणनिर्देशः । तत्त्वानामुत्तरोत्तरं व्याप्यव्यापकभावेन भूमिर्व्याप्या जलादिशिवान्तं व्यापकानि पञ्चत्रिंशतेवं भूतसृष्टौ व्योमादिगुणा व्यामकत्वेनानुगतास्संति । परमशिवतत्त्वस्य

सर्वत्रानुगतत्वात्विश्वमयतदुत्तीर्णयामलकौलस्वरूपमेव
भक्तानामिति वन्दनोपसंहारोक्त्ययोपक्षिप्तमिति शिवं ॥ २० - २१॥

॥ इति षट्त्रिशत्तत्त्वसंदोहश्श्रीमद्राजानकानन्दाचार्यविरचितविवरणोपेतः समाप्तः ॥